॥ भारतभूमातृस्तोत्रम् ॥

वन्दे मातरमव्यक्तां व्यक्तां च जननीं पराम् ।
दीनोऽहं बालकः कांक्षे सेवां जन्मनि जन्मनि ॥ १॥
सागरालिङ्गितां लक्ष्मीं जगज्जनककन्यकाम् ।
स्थितां हिमनगस्यांके पार्वतीमपरां भजे ॥ २॥
शुभ्रं धर्मध्वजं मातुः किं वा राशीकृतं यशः ।
रौप्यं वा मुकुटं दिव्यं वन्देऽहं तं हिमालयम् ॥ ३॥
जाह्नवीयमुनासिंधुब्रह्मपुत्रशतद्रुभिः ।
भूदेवीं पञ्चधाराभिः सततं साऽभिषिञ्चति ॥ ४॥

नगाधिपं धारयंतीं मस्तके रत्नमद्वयम् ।
काश्मीरं च ललाटे भ्रूमध्ये नेपालिकां शुभाम् ॥ ५॥

नर्मदातापतीविंध्यसप्तपीठकमेखलाम् ।
पूर्वापराचलोरू च मलयं पादपीठके ।
मध्यदेशोदरे गुप्तानक्षयान् धनसञ्चयान् ॥ ६॥

असुराणां पुरी लंका दासी यच्चरणयोः कृता ।
तां देवीं भारतीं वन्दे मातरंविश्वपूजिताम् ॥ ७॥

द्रुष्टा चैवोपनिषदां गीतशास्त्रप्रवर्तकः ।
षड्दर्शनप्रवक्ता च भगवान्पाणिनिर्मुनिः ॥ ८॥

वाल्मीकिश्च तथा व्यासः कालिदासो महाकविः ।
आर्यभट्टश्च भरतः शंकरोऽद्वैतकेसरी ॥ ९॥

भीष्मरामार्जुना वीरा नृपौ रामयुधिष्ठिरौ ।
सावित्री द्रौपदी सीता दमयंती च तारका ॥ १०॥

महाधान्यद्वितीयानि रत्नान्येतानि भूतले ।
जननी भारती तेषां रत्नगर्भा कथं न सा ॥ ११॥

वसुन्धरा रत्नगर्भा रसा विश्वंभरा क्षमा ।
सर्वंसहा स्थिरा चैव भारती भूसुकन्यका ॥ १२॥
रत्नाकरः स्वयं भक्त्या मुक्तोपायनपूर्वकम् ।
चरणान्क्षालयत्यस्या अतंद्रश्च दिवानिशम् ॥ १३॥
कैलासद्वारकाधीशौ रामेश्वरपुरीश्वरौ ।

द्वारपाला बभूवुश्च सौभाग्यं मातुरद्भुतम् ॥ १४॥

पोष्यन्ति सदा मातुः पर्वतस्तनमंडलात् ।
निःसृताश्च पयोधाराः संततीनां परंपराः ॥ १५॥
पुत्रवत्सलता  मातुरगाधा हरिणा स्वयम् ।
अवतीर्योदरे सोढं गर्भदुःखं पुनः पुनः ॥ १६॥
मरणे जन्मकाले च मुमूर्षुर्नवबालकः ।
त्वदंके चैव संशेते अहो वत्सलता तव ॥ १७॥

पद्मालया त्वमेवासि त्वमेव च सरस्वती ।
अन्नपूर्णा त्वमेवासि त्वमेव च शिवा सती ॥ १८॥
त्वद्दृक्षाः कल्पवृक्षाश्च चिन्तामणिशिलाः शिलाः ।
त्वद्वनं नंदनं साक्षात्साक्षात्त्वं स्वर्गदेवता ॥ १९॥

प्रतिजन्मनि मे चित्तं वित्तं देहश्च संततिः ।
त्वत्सेवानिरता भूयुर्माता त्वं करुणामयी ॥ २०॥

न मे वांछाऽस्ति यशसि विद्वत्त्वे न च वा सुखे ।
प्रभुत्वं नैव वा स्वर्गे मोक्षेऽत्यानंददायके ॥ २१॥

परं च भारते जन्म मान्वस्य च वा पशोः ।
विहंगस्य च वा जन्तोर्वृक्षपाषाणयोरपि ॥ २२॥

निरन्तरं भवतु मे मातृसेवांशभाग्यभाक् ।
एषैव वाञ्छा हृदये साक्षी सर्वात्मकः प्रभुः ॥ २३॥

इति श्रीभारतभूमातृस्तोत्रं सम्पूर्णं